**गङ्गाभगवत्याः यमुनाभगवत्याः कालिकाभगवत्याः सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुरसुन्दर्याः शैल-पुत्र्याः, ब्रह्मचारिण्याः, कूष्माण्ड्याः, चण्डघण्टायाः, स्कन्दमातुः, सिद्धिदायाः, महागौर्याः, कालरात्र्याः, कात्यायन्याः नवदुर्गाभगवत्याः सहस्रनाम्न्याः दुर्गादेव्याः भवान्याः आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रीदेवीप्रीत्यर्थं देवीपूजनमऽर्चामहं करिष्ये ऊँ कुरुष्व।।**

तिल, पीली सरसों और जौ दाने तीनों मिलाकर अपने दोनों कन्धों के ऊपर से पीछे की ओर फेंकना, फिर दो दर्भकाण्ड या पुष्प हाथ में रखकर नीचे लिखे मन्त्र को पढ़ने के बाद देवी के कुण्ड में डालना।

**आगच्छ त्वममादेवि ! भक्ताऽशयनिवासिनि !**
**प्रीत्या दत्तमासनं ते स्वास्यतां मम प्रीतये।।**
**भगवत्याः अमायाः०**

ऊपर जो सारा दिया है उसे पढ़कर यह कहना-

**इदमासनं[१] नमः।।**

दोदर्भ काण्ड अक्षत समेत हाथ में रखकर देवी की पूजा[२] की आज्ञा लेना।

---

१. आ - आत्मसिद्धि प्रदानात् च । स - सर्व रोग निवारणात्।
न - नवसिद्धि प्रदानात् च आसनं कथितं प्रिये।।

हे प्रिये! आत्मसिद्धि प्रदान करने से सारे रोगों से छुटकारा दिलाने के कारण और नौ सिद्धियों से सम्पन्न कराने से आसन को आसन कहा जाता है।

२. पूर्वजन्मानुशमनात् जन्ममृत्यु निवारणात्। सम्पूर्ण फल दानात् च पूजेति कथिता प्रिये।।

हे प्रिये! पूर्व जन्मों का शमन करने से, जन्म मृत्यु को हटाने से, और सम्पूर्ण शुभ फल को देने के कारण पूजा को पूजा कहा जाता है।। त्रिकतन्त्रसार में कहा है-

आनन्दप्रसरः पूजा तां त्रिकोणे प्रकल्पयेत्।

अर्थात् आनन्द के प्रसार को ही पूजा कहते हैं। यह पूजा त्रिकोण पर करनी चाहिए। त्रिकोण प्रणाली युक्त शिवलिङ्ग का वाचक है।

**भगवत्यै अमायै० युष्मान्वः पूजयामि ॐ पूजय।**

दोदर्भ काण्ड छोड़े बिना केवल अक्षत कन्धों से फेंककर नया अक्षत पहिले रखे दो दर्भकाण्डों के साथ हाथ में रखकर देवी का आवाहन करना।

**भगवतींअमां कामां चार्वङ्गीं टङ्कधारिणीं तारां पार्वतीं यक्षिणीं श्रीशारिकाभगवतीं श्रीशारदाभगवतीं श्रीमहाराज्ञी-भगवतीं श्रीज्वालाभगवतीं व्रीडाभगवतीं वैखरीभगवतीं वितस्ताभगवतीं गङ्गाभगवतीं यमुना-भगवतीं कालिका-भगवतीं सिद्धलक्ष्मीं महालक्ष्मीं महात्रिपुर-सुन्दरीं शैलपुत्रीं, ब्रह्मचारिणीं कूष्माण्डीं, चण्डघण्टां, स्कन्द-मातरं, सिद्धिदां, महागौरीं, कालरात्रीं, कात्यायनीं, नव-दुर्गाभगवतीं सहस्रनाम्नीं दुर्गादिवीं भवानीं आवाहयिष्यामि ॐ आवाहय[१]।।**

यह पढ़कर अक्षत समेत दोनों दर्भकाण्डों को दोनों कंधों के ऊपर से फेंकना। फिर हाथ जोड़कर जलकुण्ड में फूल डालना-

**श्रीशारिके त्रिपुरसुन्दरि शर्मसिन्धो**
**ज्वालेऽत्र राज्ञि वरदेऽखिलविश्वमातः।**
**शर्वांधेदेहनिलये धिषणे मदीयां**
**पूजामिमां स्वपरिवारयुता गृहाण।।**
**हे देवि त्वं पराशक्ते भक्तानुग्रहकारिणि।**
**अस्मद्दयानुरोधेन सन्निधिं कुरु चात्र भोः।। ३।।**

अब हाथ जोड़कर मानसिक पूजा करके यह पढ़ना-

**इत्याहूय च गायत्रीं त्रिःसमुच्चार्य तत्ववित्।**
**मनसा चिन्तितैर्द्रव्यैर्देवीमात्मनि पूजयेत्।।**

---

१. देवं पूजार्थमाह्वानमावाहनमिति स्मृतम्।
इष्टदेव को पूजा के लिए बुलाना ही आवाहन है।

**तेजोरूपां ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत्।।**

दो तीन जऊँ दाने दोनों कन्धों के ऊपर से फेंककर पीछे बताए गए श्रीमहाराज्ञी मन्त्र से पूर्वोक्त विधि से प्राणायाम करना।

अब श्री महाराज्ञी को पाद्य देने के लिए तांबे के पात्र में पानी डालना फिर उस पानी को अपने हाथ में डालकर

**शन्नोदेवीरभिष्टय आपो भवन्तु पीतये।**
**शंय्योरभि स्रवन्तु नः।।**

यह मंत्र पढ़कर वापिस तांबे के पात्र में डालना। फिर उस पानी में खीलें (लायि) केसर, सर्वौषधि विष्टर जल ये पांच चीज डालकर देवी के पैर धोना। यह मंत्र पढ़कर–

**एहि कामे कामहर्त्रि स्वेष्टकामदुघे शिवे।**
**भक्त्या पाद्यं मया दत्तं क्षाल्यतां पादपीठिकाम्।।**
**भगवत्यै महाराज्यै पाद्यं[१] नमः।**
**पाद्यंशेषं निवारयेत्।**

बचा हुआ जल छोड़े। नया जल ले फिर

**शन्नोदेवीरभिष्टय आपो भवन्तु पीतये।**
**शंय्योरभि स्रवन्तु नः।।**

यह मंत्र पढ़कर पानी हाथ का वापिस तांबे के पात्र में डालना फिर उस पानी में दूध, पानी, विष्टर, घी, दही, चावल, जऊं और पीली सरसों ये आठ द्रव्य (अर्घ्य[२] अर्थात् श्री महाराज्ञी के हाथ मुंह धोने

---

१. पाद्यं– धर्मार्थ काम मोक्षाणां संस्थानं पाद्यंउच्यते।
अर्थात् धर्म अर्थ काम और मोक्ष का स्थान पाद्य माना जाता है।

२. अर्घ्यं– अर्घ्येण लभते कामान् अर्घ्येण लभते धनम्।
पुत्रायुः सुख मोक्षादि दानात् अर्घस्य वै लभेत्।।
पुष्प– गन्धर्व तन्त्र में कहा है–
पुष्पमूले वसेद्ब्रह्मा पुष्पमध्येतु केशवः। पुष्पाग्रेऽहं स्थितो नित्यं सर्वे देवाः स्थिता दले। ब्रह्म विष्णु शिवादीनां पुष्पमेव सदा प्रियम्।।

की चीजे हैं) उसमें छोड़ना।

**भगवति अर्घ्यं अर्घ्यं।।**

**चार्वङ्गि त्वमिहागच्छ सतां चार्वङ्गदायिनि।**

**मयाऽऽनीतमर्घ्यमिदं शुद्धचेतां मुखहस्तकौ।।**

**भगवति अमे कामे चार्वङ्गि टङ्कधारिणि तारे पार्वति यक्षिणि श्रीशारिकाभगवति श्रीशारदाभगवति श्रीमहाराज्ञी-भगवति श्रीज्वालाभगवति व्रीडा-भगवति वैखरीभगवति वितस्ताभगवति गङ्गाभगवति यमुनाभगवति कालिका-भगवति सिद्धलक्ष्मीः महालक्ष्मीः महात्रिपुरसुन्दरि शैलपुत्रि, ब्रह्मचारिणि कूष्माण्डि, चण्डघण्टे, स्कन्दमातः, सिद्धिदे, महागौरि, कालरात्रि, कात्यायनि, नवदुर्गाभगवति, सहस्रनाम्रि दुर्गादेवि भवानि इदं वोऽर्घ्यं नमः।।**

अब देवी का, साफ पानी पात्र में डालकर, आचमन अर्थात् मुंह सफा करवाना नीचे दिए गए मंत्र से-

**टङ्कधारिणि त्वमेहि दुष्टान् टङ्कैर्विधारिणि।**

**गृहाणाचमनं दत्तं मुखान्तर्मलमृष्टये।**

**भगवत्यै महाराज्ञ्यैआचमनीयं नमः।।**

देवी के शरीर पर लगी द्रव्यों की मलिनता हटाने के लिए थोड़ा सा साफ पानी उस पर यह मंत्र पढ़कर डालना-

**आगच्छ तारे स्थानेऽस्मिन् भवसागरतारिणि।**

**मलोत्थापनकं देहात्मन्त्रस्नानं च स्वीकुरु।।**

**भगवत्यै महाराज्ञ्यै मन्त्रस्नानीयं नमः।।**

फिर महाराज्ञी के स्नान के लिए ये द्रव्य पानी में डालता-

लाज (लायि) गन्ध, वचः (वय कश्मीरी भाषा में) कुष्ठं (कश्मीर भाषा में क्वठ) वालुकं (छोटी सब्ज इलायची) शंख पुष्पक (सफेद फूल) कुंकम (केसर) अगरु, (एक प्रकार की लकड़ी का चूर्ण) कर्पूर

(काफूर की डल्ली)। इसके अतिरिक्त दूध की अच्छी मात्रा और शक्कर डालना। यह बड़े पात्र में तैयार करके नीचे लिखे मंत्रों से महाराज्ञी का स्नान करना। पहले महाराज्ञी मंत्र की एक माला जप करते करते जल कुण्ड में मिश्रित पानी डालना। फिर नीचे लिखे मंत्रों से स्नान करना।

इदमपि च ॥

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ १ ॥
अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा।
पूश्चपृथ्वीबहुला न उर्वी भवा तोकाय तनयाय शंय्योः॥ २ ॥
विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि।
अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ ३ ॥
पृतनाजितं सहमानमुग्रम-ऽग्निं हुवेम परमात्सधस्थात्।
स नः पर्षदतिदुर्गाणिविश्वाक्षामाद्देवो अतिदुरितात्यग्निः॥४ ॥
प्रत्नोहि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि।
स्वां चाग्ने तन्वं पिप्रयस्वा-स्मभ्यं च सौभगमायजस्व ॥५ ॥
यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा।
चतस्र ऊर्जं दुदुहे पयांसि क्वस्विदऽस्याः परमं जगाम ॥ ६ ॥
देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥ ७ ॥
प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती।
धीनामवित्र्यवतु ॥ ८ ॥
ॐ गायत्र्यै सावित्र्यै / सरस्वत्यै नमः
ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो
देवस्य धीमहि, धियो यो नः प्रचोदयात् ॥ ३ ॥ ॥ ९ ॥
जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।

**स नः पर्षदतिदुर्गाणिविश्वानावेव सिन्धुंदुरितात्यग्निः।। १० ।।**
**भगवत्यै० महाराज्ञ्यै अष्टौ स्नानानि परिकल्पयामि नमः ।**

फिर **ॐ नमो देवभ्यः।** "**कंठोपवीती**" गले में जनेऊ करके - **स्वाहा ऋषिभ्यः।** "**अपसव्येन**" बायीं ओर जनेऊ रखके - **स्वधा पितृभ्यः ।** पितरों का पहिले विधि अनुसार तिलयुक्त पानी से तर्पण करना। यह पढ़कर- **तत् सद् ब्रह्म अद्य तावत् तिथौ अद्य अमुक मासस्य कृष्ण / शुक्ल पक्षस्य तु महापर्वणि अष्टम्यां** फिर पिता, पितामह, प्रपितामह, वृद्ध प्रपितामह, माता, पितामही, प्रपितामही आदि का नाम गोत्र सहित लेकर **तृप्यतां तृप्यतां तृप्यता** कहकर कहना फिर दाहिनी ओर जन्यू करके **तत् सद् ब्रह्म०** आदि सारा पढ़कर तिलयुक्त पानी से श्री गुरु, परमगुरु, परमेष्ठिगुरु का नाम गोत्र सहित लेकर **तृप्यतां तृप्यतां तृप्यता** कहकर जल कुण्ड में पानी डालना। फिर दायीं ओर जनेऊ करके पानी डाले यह पढ़कर।

**आ ब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत् तृप्यतु तृप्यतु तृप्यतु एवमस्तु।।** फिर पात्र में नया पानी **'ऐंक्लींसौः हसरक्षमलवयऊंह्रींश्रींरां'**

इस मन्त्रसे सात वार मन्त्रित करके अपने माथेतक लेके अमृतसे भराहुवा ध्यान करके देवी के सिरपर छोड़ना। यह मन्त्रगुडक है।। फिर "बाहें करतल में अक्षत युक्त पानी रख के आरात्रिका (आलथ-कश्मीरी में) निकालना-

**गृह्णन्तु चण्डिकाभक्ता भूताः प्रासादबाह्यगाः।**
**पञ्चभूतात्मकाः प्रेतास्ते तृप्यन्तु सदा वौषट्।।**

फिर देवी के पादों का जल नेत्रों को मलना" इस मंत्र से-

**एहि देव पराशक्ते भगवत्यमलाशये।**
**प्रकाशय परं तेजो नेत्रस्पर्शेन वैष्णवि।।**
**उत्तिष्ठ देहि शरणं भुवि चित्रमाये**

**ह्युत्तिष्ठ दुष्टकृतदुःखततिं कृणीहि।**

**उत्तिष्ठ देहि शरणंभुवि चित्रमाये**

**ह्युत्तिष्ठ दुष्टकृतदुःखततिं कृणीहि।।**

**उत्तिष्ठ भक्तवरदायकमऽधि धेहि**

**ह्युत्तिष्ठ शोकभयकुञ्जमिदं लुनीहि।।**

फिर देवी का आसन देना फूलों को बिछाना से यह पढ़कर-

**आसनाय नमः, सिंहासनाय नमः, शवासनाय नमः, मुञ्चासनाय नमः, ज्ञानासनाय नमः, नागासनाय नमः।।**

फिर अनुलेपन करना।

**सृष्टेरधिष्ठि-तिभुवः किमु चासनं ते,**

**नानाचमत्कृतिकृतः किमु भूषणं वा।।**

**किं देयमस्ति भुवनासुप्रदायिकाया**

**वाच्यं किमस्ति स्वयमेव त्रयीजनन्याः।।**

"ऐसे ही देवीस्तोत्र पढते हुए देवीको चन्दनादि द्रव्योंसे अनुलेपन (मलना) करना"।।

"वस्त्र पहनाना" जो नया वस्त्र देवी के लिए लाया हो वही वस्त्र पहनाना नीचे दिये मन्त्र से-

**एहि पार्वति ! शैलोत्थे वस्त्र त्वग्रोम-कोशजम्।**

**नानावर्णं मयानीतं व्रियतां चारु भावजम्।।**

**भगवत्यै० महाराज्ञ्यै वस्त्रं परिकल्पयामिनमः।।**

"जनेऊ पहनना"।।

**यक्षिण्येहि यज्ञ-मातः सुवर्णतन्तुनिर्मितम्।**

**त्रिगुणात्म यज्ञसूत्रं मयानीतं सुवीष्ट्च्यताम्।**

**भगवत्यै० महाराज्ञ्यै यज्ञोपवीतं नमः**

"गन्ध चढाना"।।

**शारिके त्वं विद्रुमाभे चन्दनागुरुकुङ्कुमैः।**

संस्कृतं तिलकं भाले क्रियतां मम प्रीतये।।

भगवत्यै० महाराज्ञ्यै समालभनं गन्धोनमः।

लेपं निवारयेत्-

हाथ पर गन्ध का लेप हटाना।

"अक्षत और फूल चढाना"।।

हे शारदे ! शास्त्रदात्रि ! दूर्वार्घ-बिल्वपुष्पवत्।

नानाविधं पुष्पजाति प्रीत्यानीतं सुमर्द्यताम्।।

एक एक मन्त्र के पढ़ने के बाद एक फूल चढ़ाते रहिये-

ऊँ गांगणपतये नमः, भैंभीमराजायनमः,

कांकुमारायनमः। जुंजाङ्गलेश्वरायनमः।

ओंलं इन्द्रायनमः ऊँ ह्रीं अग्रये नमः ऊँ ह्रीं धर्मराजायनमः, नैऋतयेनमः, वरुणायनमः, वायवेनमः, कुबेरायनमः, ईशाना नमः, ब्रह्मणेनमः, अनन्तायनमः। धूम्रार्चिषेनमः, ऊष्मायनमः, ज्वलिन्यैनमः, ज्वालिन्यैनमः, विस्फुलिङ्गन्यैनमः, सुश्रियेनमः, स्वरूपायनमः, कपिलायैनमः, हव्यवाहनायैनमः, कव्यवाहनायनमः, दशकलात्मने वह्नयेनमः। तपिन्यैनमः, तापिन्यै नमः, धूम्रायैनमः, मरीच्यैनमः, जुलिन्यैनमः, तथ्यैनमः, सुषुम्णायैनमः, भोगदायैनमः, विश्वायैनमः, बोधिन्यैनमः, धारिण्यैनमः, क्षमायैनमः, द्वादशकलात्मनेसूर्यायनमः। अमृतायैनमः, आनन्दायैनमः, पूषायैनमः, तुष्ट्यैनमः, पुष्ट्यैनमः, रत्यैनमः, धृत्यैनमः, शिशिन्यैनमः, चण्डिकायैनमः, कान्त्यैनमः, ज्योत्स्नायैनमः, श्रियैनमः, प्रीत्यैनमः, अङ्गदायैनमः, पूर्णायैनमः, पूर्णामृतायैनमः, षोडशकलात्मनेशशिनेनमः।

अभीष्टसिद्धिं से देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं प्रथमावरणार्चनम्।।

ऊँ गुरवे नमः, परमगुरवेनमः, परमेष्ठिगुरवेनमः।।

अभीष्टसिद्धिं से देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं द्वितीया-वरणार्चनम्।

अनन्तनागराजायनमः, वासुकिनागराजायनमः, कार्कोटक-नागराजायनमः, शङ्खपालनागराजायनमः, तक्षकनागराजाय-नमः, कुलिकनागराजायनमः, पद्मनागराजायनमः, महापद्म-नागराजाय नमः।।

अभीष्टसिद्धिं से देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं तृतीयावरणार्चनम्।।

असिताङ्गभैरवयुत-ब्राह्म्यैनमः, रुरुभैरवयुतवैष्णाव्यै नमः, चण्डभैरवयुतरुद्राण्यैनमः, क्रोधभैरवयुतनारसिंह्यैनमः, उन्मत्तभैरवयुतकौमार्यैनमः, भीषणभैरवयुत चामुण्डायैनमः, कपालेश्वरभैरवयुतवाराह्यैनमः, संहारभैरवयुतमहालक्ष्म्यै नमः।।

अभीष्टसिद्धिं से देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं चतुर्थावरणार्चनम्।।

दुर्गायैनमः, भगवत्यैनमः, अमायैनमः, कामायैनमः, चार्वङ्ग्यैनमः, टङ्कधारिण्यैनमः, तारायैनमः, पार्वत्यैनमः, यक्षिण्यैनमः, श्रीशारिकायैनमः, श्रीशारदायैनमः, श्रीमहा-राज्ञ्यैनमः, श्रीज्वालायैनमः, व्रीडायैनमः, वैखर्यैनमः, वितस्तायैनमः, गङ्गायैनमः, यमुनायैनमः, कालिकायैनमः, सिद्धलक्ष्म्यैनमः, महात्रिपुरसुन्दर्यैनमः।।

अभीष्टसिद्धिं से देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं पञ्चमावरणार्चनम्।।

गायत्र्यैनमः, सावित्र्यैनमः, सरस्वत्यैनमः, बालायैनमः, भुवनेश्वर्यैनमः।।

अभीष्टसिद्धिं से देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं षष्ठावरणार्चनम्।।

वज्रायनमः, शक्तयेनमः, दण्डायनमः, खड्गायनमः, पाशायनमः, ध्वजायनमः, गदायैनमः, त्रिशूलायनमः, पद्मायनमः, चक्रायनमः।।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।

भक्तया समर्पये तुभ्यं सप्तमावरणार्चनम्।।

अग्न्यादित्याभ्यांनमः, वरुणचन्द्रमोभ्यांनमः, कुमार-भौमाभ्यांनमः, विष्णुबुधाभ्यांनमः, इन्द्राबृहस्पतिभ्यांनमः, सरस्वतीशुक्राभ्यांनमः, प्रजापतिशनैश्चराभ्यांनमः, गणपति-राहुभ्यांनमः, रुद्रकेतुभ्यांनमः, ब्रह्मध्रुवाभ्यांनमः, अनन्ता-गस्त्याभ्यां नमः।। पराशक्तयेनमः चिच्छक्तये नमः सहस्त्रनाम्न्यैनमः, दुर्गादिव्यैनमः, भवान्यैनमः, अर्घोनमः पुष्प नमः।।

"धूप[१] चढ़ाना"।।

महाराज्ञि राजसेव्ये साज्यं गुग्गुलसंस्कृतम्।

अष्टगन्धयुतं धूपं मया नीतं सुजिघ्रताम्।

तत् सद् ब्रह्म अद्यतावत् तिथौ अद्य अमुक मासस्य कृष्ण / शुक्ल पक्षस्य महापर्वणि तिथौ प्रतिपदा/आदि अमुक वासरान्वितायां भगवत्यै महाराज्यै धूपं परिकल्पयामि नमः।।

"रत्नदीप[२]"।।

एहि ज्वाले महा-ज्वाले कर्पूरपीठमण्डितम्।

---

१. धूप - धूताशेष महादोष पूतिगन्धप्रभावतः। परमानन्द जननात् धूप इत्यभिधीयते।।
प्रदूषण युक्त वातावरण की दुर्गन्धि से उत्पन्न सारे महान दोषों को हटाकर परम आनन्द देने से धूप की महत्ता कही गई है।

२. दीप - दीर्घाज्ञान महाध्वान्ताहंकार परिवर्जनात्। परतत्त्वप्रकाशात् च दीप इत्यभिधीयते।।
दीर्घ अज्ञान के महान अन्धकार को तथा अहं भावना को मिटाने से और परतत्त्व को प्रकाशित करने से दीप की महत्ता कही गई है।।

नानावर्ति रत्नदीपं मया दत्तं प्रकाश्यताम्।

तत् सद् ब्रह्म अद्यतावत् तिथौ अद्य अमुक मासस्य कृष्ण / शुक्ल पक्षस्य महापर्वणि तिथौ प्रतिपदा/आदि अमुक वासरान्वितायां भगवत्यै महाराज्ञ्यै रत्नदीपं समर्पयामि नमः।।

कर्पूर-

कर्पूर की (Camphor) टिकिया या ढली को जलाकर नीचे दिये मन्त्र से महाराज्ञी को अर्पण करना-

**कर्पूरदीपं सुमनोहरं प्रभो ! ददानि ते देवि ! मयि प्रसीद भो। पापान्धकारं त्वरितं निवारय प्रज्ञान दीपं मनसि प्रज्वालय।।**

**तत् सद् ब्रह्म अद्यतावत् तिथौ अद्य अमुक मासस्य कृष्ण / शुक्ल पक्षस्य महापर्वणि तिथौ प्रतिपदा/आदि अमुक वासरान्वितायां भगवत्यै महाराज्ञ्यै कर्पूरदीपं समर्पयामि नमः।।**

"चामर"

**एहि व्रीडे वीतव्रीडे चामरं पिच्छलैर्युतम्।**
**सुख-वातप्रदं सम्यक् दत्तं स्वीक्रियतामिदम्।।**

(गौरीं अम्बां स्तुति) सारी पढ़कर"

**भगवत्यै महाराज्ञ्यै चामरं समर्पयामिनमः।।**

यह कहकर चामर अर्पण करे।

"अन्य उपकरण" (छत्र, ध्वजा, पंखा, आभूषण आदि)

**एहि दुर्गे पराशक्ते भक्त्या कंकतिकां शुभाम्।**
**ध्वजं छत्रं व्यञ्जनं च मया नीतं विभूष्यताम्।**

**तत् सद् ब्रह्म अद्यतावत् तिथौ अद्य अमुक मासस्य कृष्ण / शुक्ल पक्षस्य महापर्वणि तिथौ प्रतिपदा/आदि अमुक वासरान्वितायां भगवत्यै महाराज्ञ्यै उपकरणानि**

(जो छत्र आदि में हो उसका नाम लेकर पढ़ना)

**समर्पयामि नमः।।**

"आईना" दिखाना-

**हे वैखरि विश्वमातस्त्वदष्ट्याऽदर्शबिम्बवत्।**

**भाति विश्वं स्वयं त्वं साऽऽदर्श दत्तं सुपश्यताम्।।**

**तत् सद् ब्रह्म अद्यतावत् तिथौ अद्य अमुक मासस्य कृष्ण / शुक्ल पक्षस्य महापर्वणि तिथौ प्रतिपदा/आदि अमुक वासरान्वितायां भगवत्यै महाराज्ञ्यै आदर्श समर्पयामि नमः।।**

पानी निर्माल्य में छोड़ते हुए पढ़े-

**एताभ्यो देवताभ्यः दीपोनमः धूपोनमः।।**

**सपरिवारायाः पराशक्तेरर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु।।**

अब महाराज्ञी को चरु देना अर्थात् तांबे के पात्र[१] में दूध, घी, शहद, शक्कर, दही, इकट्ठा करके "मधुपर्क"[२] चढ़ाना-

**हे वितस्ते पापहर्त्रि क्षीराज्यमधुशर्करम्।**

**षड्रसास्वादितं भक्ष्यं चरुं न्यस्तं सुस्वाद्यताम्।**

**भगवत्यै महाराज्ञ्यै चरुं समर्पयामि नमः।।**

अब पंचस्तवी के कुछ चुने हुए श्लोकों को पढ़कर फिर 'फूलो की अञ्जलि' माता महाराज्ञी को अर्पण करना इस मंत्र से-

**एहि गङ्गे विष्णुपज्जे बिल्वदूर्वाब्जमण्डिताम्।**

**पुष्पाञ्जलिमिमां भक्त्या दत्तां नस्यां सुजिघ्रताम्।।**

**भगवत्यै महाराज्ञ्यै पुष्पाञ्जलिं समर्पयामि नमः।।**

नीचे दिये मन्त्र को पढ़ने के प श्चात् माता के सामने अंगूर, केला, अनार, या खजूर का फल यह मन्त्र पढ़कर रखो-

**यमुने त्वं यमस्वसुर्भव्यखर्जूरदाडिमम्।**

---

१. तांबे का पात्र प्रशस्त माना जाता है, कहा है-

ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः स्थिताः सदा।

२. मधुपर्क- ज्योतिष्टोम यज्ञ और अश्वमेघयज्ञ से जो पुण्य प्राप्ति होती है वह सब मधुपर्क में प्रतिष्ठित है।

**द्राक्षारुकाम्बरम्भादि फलं प्रत्तं सुभक्ष्यताम्।।**
**भगवत्यै महाराज्ञ्यै फलंसमर्पयामि नमः।।**

सब्ज़ इलायची छोटी, लौंग, काली मिर्च, सुपारी, छुआरा, सोगी को इकट्ठा करके पात्र में रखकर "ताम्बूल" देवी के सामने यह मन्त्र पढ़कर रखिए-

**कालिके त्वं कोकिलाभे पूगताम्बूलपानकम्।**
**मुखभागन्धदं दत्तं प्रीत्या श्वासं सुगन्ध्यताम्**
**भगवत्यै महाराज्ञ्यै ताम्बूलं समर्पयामि नमः।।**

"एक परिक्रमा[१] मन से देवी के जल कुण्ड के इर्द-गिर्द यह मन्त्र पढ़कर करें-

**सिद्धलक्ष्मीः विष्णुपत्नि ! ज्ञाताज्ञातकृतानि मे।**
**दशधैनांसि दह्यन्तां प्रक्रमैक-विधानतः।।**
**ॐ नमो भगवत्यै महाराज्ञ्यै प्रसीद।।**

पंचस्तवी और सौन्दर्यलहरी के कुछ मधुर स्तोत्र पढ़कर अष्टाङ्ग-प्रणाम करना"-

**महालक्ष्मी मारमातर्भुक्तिमुक्ति-फलप्रदम्।**
**भक्त्या कृतं प्रणामं ते साष्टाङ्गं स्वीविधीयताम्।।**
**उभाभ्यां जानुभ्यां पाणिभ्यामुरसा शिरसा मनसा**
**वचसा च नमस्कारं करोमि नमः।।**

पानी (निर्माल्य में) डालना पात्र से पूजा में हुई विधि आदि की कमी के दोष से मुक्त होने के लिए-

**अन्नं नमः २ आज्यमाज्यमऽद्यदिनेऽद्ययथासङ्कल्पात् सिद्धिरस्तु। अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं**

---

१. कहा है - एका चण्ड्या रवेः सप्त तिस्रः कार्या विनायके।
हरेश्चतस्रः कर्तव्याः शिवस्यार्ध प्रदक्षिणा।।

अर्थात् देवी की एक प्रदक्षिणा, सूर्य की सात बार, गणेश की तीन बार विष्णु की चार बार और शंकर की अर्ध प्रदक्षिणा करनी चाहिए।

**च यत्गतं तत् सर्वंअच्छिद्रं सम्पूर्णमस्तु एवमस्तु।।**

अब पानी वाले पात्र से दायें हाथ पर पानी डालकर वापिस पात्र में नीचे लिखे मन्त्र से पानी डाले।

**शन्नोदेवीरभिष्टये आपो भवन्तु पीतये शंय्योरभिस्त्रवन्तु नः।**

इस पानी से देवीकुण्ड के सामने

**भगवत्यै महाराज्ञ्यै अपोशानं नमः**

कहकर पानी डालें। पुनः

**शन्नोदेवीरभिष्टये आपो भवन्तु पीतये शंय्योरभिस्त्रवन्तु नः।**

ऊपर कही हुई विधि के अनुसार पानी पात्र में वापिस डालकर उस पानी से यथा शक्ति भगवती के सामने रुपया पैसा,

**भगवत्यै महाराज्ञ्यै दक्षिणायै तिलहिरण्यरजतनिष्कर्णं ददानि**

कहकर डाले।

फिर एक सिक्का पानी से भिगोकर

**एता देवताः सदक्षिणाऽन्नेन प्रीयन्ता प्रीताः सन्तु**

यह कहकर डालें।।

नैवेद्य- (प्रेपुन) कश्मीरी शब्द प्रेपुन का अर्थ है पराशक्ति को अर्पण= प्रेपुन। परार्पण से 'प्रेपुन' बना है।

अच्छी सजी हुई थाली में क्षीर या हलवा या मिठाई या अन्य मीठे पदार्थ रखकर देवी के सामने रखिए। फिर सारे भक्त जन उस थाली को दोनों हाथों से पकड़कर यह नैवेद्य मन्त्र पढ़ें-

**"नैवेद्यम्:"**

**"ऊँ अमृतोद्भवाय सोमाय अन्नाय ठः ठः**

यह मन्त्र पढ़कर जल की छीटें नैवेद्य थाली पर डालिये-

अमृतेशमुद्रयाऽमृतीकृत्य अमृतमस्तु अमृतायतां नैवेद्यम्।

सावित्राणि सावित्रस्य देवस्य त्वा सवितुः

प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे।।

महागणपतये, कुमाराय, श्रियै, सरस्वत्यै, लक्ष्म्यै, विश्वकर्मणे द्वार्देवताभ्यः।। प्रजापतये, ब्रह्मणे, कलश-देवताभ्यः, ब्रह्मविष्णुमहेश्वरदेवताभ्यः, चर्तुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय (मार्गशीर्षे) रुक्मिणीसहिताय कृष्णाय,श्रीसहिताय केशवाय। (पौषे) प्रियासहिताय, अनन्ताय, वागीश्वरीसहिताय नारायणाय (माघे) प्रीतिसहिताय अच्युताय, कान्तासहिताय माधवाय (फाल्गुणे) शक्ति-सहिताय चक्रिणे, क्रियासहिताय गोविन्दाय (चैत्रे) सिद्धिसहिताय वैकुण्ठाय, मतिसहिताय विष्णवे। (वैशाखे)। शोभासहिताय जनार्दनाय, विभूतिसहिताय मधुसूदनाय। (ज्येष्ठे)। महिमासहिताय उपेन्द्राय, इच्छासहिताय त्रिविक्रमाय। (आषाढे)। लक्ष्मीसहिताय यज्ञपुरुषाय, धृतिसहिताय वामनाय। (श्रावणे)। कान्तिसहिताय वासुदेवाय, रतिसहिताय श्रीधराय। (भाद्रपदे)। प्राप्तिसहिताय हरये, मायासहिताय हृषीकेशाय। (अश्वयुजे) । प्राकाम्यासहिताय योगीश्वराय, धीसहिताय पद्मनाभाय। (कार्तिके) लघिमासहिताय पुण्डरीकाक्षाय, गरिमासहिताय दामोदराय। (मलिम्लुचे)। सत्यभामासहिताय नरकारये, निष्कलासहिताय महामार्तण्डाय।। दुर्गायै त्र्यम्बकाय, वरुणाय, यज्ञपुरुषाय, अग्निष्वात्तादिभ्यः पितृगण-यागदेवताभ्यः।। भगवते वासुदेवाय, सङ्कर्षणाय, प्रद्युम्नाय, अनिरुद्धाय, सत्याय, पुरुषाय, अच्युताय, माधवाय, गोविन्दाय, सहस्रनाम्ने विष्णवे, लक्ष्मीसहिताय नारायणाय।। भवाय देवाय, शर्वाय देवाय, रुद्राय देवाय, पशुपतये देवाय, उग्राय

देवाय, भीमाय देवाय, महादेवाय देवाय, ईशानाय देवाय, ईश्वराय देवाय, उमासहिताय, शिवाय, पार्वतीसहिताय परमेश्वराय।। विनायकाय, एकदन्ताय, कृष्णपिङ्गलाय, गजाननाय, लम्बोदराय, भालचन्द्राय, हेरम्बाय, आखुरथाय, विघ्नेशाय, विघ्नभक्ष्याय, वल्लभासहिताय श्रीमहागणेशाय।। क्लींकांकुमाराय, षण्मुखाय, मयूरवाहनाय, सेनाधिपतये कुमाराय।। ह्रांह्रींसः सूर्याय सप्ताश्वाय, अनश्वाय, एकाश्वाय, नीलाश्वाय, प्रत्यक्षदेवाय, परमार्थसाराय, तेजोरूपाय, प्रभासहिताय आदित्याय।। भगवत्यै अमायै कामायै, चार्वङ्ग्यै, टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकाभगवत्यै, श्रीशारदाभगवत्यै, श्रीमहाराज्ञीभगवत्यै, श्रीज्वालाभगवत्यै, व्रीडाभगवत्यै, वैखरीभगवत्यै, वितस्ताभगवत्यै, गङ्गाभगवत्यै, यमुनाभगवत्यै, कालिकाभगवत्यै, सिद्धलक्ष्म्यै, महालक्ष्म्यै, महात्रिपुरसुन्दर्यै, सहस्रनाम्न्यै देव्यै भवान्यै।। अभयङ्करीदेव्यै, क्षेमङ्करीभवान्यै, सर्वशत्रुघातिन्यै, इह राष्ट्रधिपतये, अमुकभैरवाय।। इन्द्राय वज्रहस्ताय, अग्नये शक्तिहस्ताय, यमाय दण्डहस्ताय, नैर्ऋतये खड्गहस्ताय, वरुणाय पाशहस्ताय, वायवे ध्वजहस्ताय, कुबेराय गदाहस्ताय, ईशानाय त्रिशूलहस्ताय, ब्रह्मणे पद्महस्ताय, विष्णवे चक्रहस्ताय, अनन्तादिभ्यः अष्टाभ्यः कुलनागदेवताभ्यः।। अग्न्यादित्याभ्यां, वरुणचन्द्रमोभ्यां, कुमारभौमाभ्यां, विष्णुबुधाभ्यां, इन्द्राबृहस्पतिभ्यां, सरस्वतीशुक्राभ्यां, प्रजापतिशनैश्चराभ्यां, गणपतिराहुभ्यां, रुद्रकेतुभ्यां, ब्रह्मध्रुवाभ्यां, अनन्तागस्त्याभ्यां।। ब्रह्मणे, कूर्माय, ध्रुवाय, अनन्ताय, हरये, लक्ष्म्यै, कमलायै, शिख्यादिभ्यः पञ्चचत्वा-रिंशद्वास्तोष्पतियागदेवताभ्यः।। ब्राहम्यदिभ्यो मातृभ्यः,

गौर्यादिभ्यो मातृभ्यः, ललितादिभ्यो मातृभ्यः, दुर्गाक्षेत्र-गणेश्वरदेवताभ्यः, राकादेवताभ्यः, त्रिकादेवताभ्यः, सिनी-वालीदेवताभ्यः, यामीदेवताभ्यः, कुहूदेवताभ्यः, रौद्री-देवताभ्यः, ऐन्द्रीदेवताभ्यः वारुणीदेवताभ्यः, बार्हस्पत्य-देवताभ्यः, ॐ भूर्देवताभ्यः, ॐ भुवर्देवताभ्यः, ॐस्वर्देवता-भ्यः, ॐ भूर्भुवःस्वर्देवताभ्यः, अखण्डब्रह्माण्डदेवताभ्यः, धूर्म्यः, उपधूर्म्यः महागायत्र्यै, सावित्र्यै, सरस्वत्यै, हेरुकादिभ्यो वटुकादिभ्यः,

उत्पन्नं अमृतं दिव्यं प्राक्क्षीरोदधिमन्थनात्।
मिष्टान्नं अमृतरूपेण नैवेद्यं प्रतिगृह्यताम्।।

तत् सद् ब्रह्म अद्यतावत् तिथौ अद्य अमुकमासस्य / ज्येष्ठमासस्य शुक्लपक्षस्य अष्टभ्यां बुधवासरान्वितायां आत्मनो वाङ्मनः कायोपार्जित पाप निवारणार्थं भगवती श्री महाराज्ञी देवी प्रीत्यर्थं। ॐ० नमो नैवेद्यं निवेदयामि नमः।।

"योगिनीबलि-(चुट्)"।। आकाशमातृभ्यो बलिंनमः, समालभनं गन्धोनमः (टीका लगाना) अर्घोनमः पुष्पंनमः।। (चावल और फूल डालना) "देवीको"।। महाराज्ञी भगवती के दो तीन स्तुति श्लोक तत् सद् ब्रह्म आदि सारा तिथि वार सहित पढ़कर।

दुर्गाभगवत्यैश्रीमहाराज्ञ्यै फलादिसमर्पयामिनमः।। "क्षेत्र-पालको"।। क्षांक्षेत्राधिपतयेऽन्नं नमः, रां राष्ट्राधिपतयेऽन्नं नमः, सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्ददातु।। यह पढ़कर तलसहित फल अन्न आदि अर्पण करे।

"नित्यकर्म जपादि करके।

## जप विधिः

अब एक माला (१०८) मन्त्र जाप करना। पहिले संकल्प के लिए पानी (निर्माल्य में) डालना-

संकल्प विधि-

तत् सत् ब्रह्म अद्यतावत् तिथौ अद्य

अमुक मासस्य कृष्ण / शुक्लपक्षस्य तु महापर्वणि- अमुक देवी / देवता प्रसन्नार्थेनपे विनियोग

१. जप - जन्मान्तर सहस्त्रेषु कृतपाप प्रणाशनात्।

परदेव प्रकाशात् च जप इत्यभिधीयते।।

तन्त्रों में कहा है कि हजारों जन्मों में किये गये पापों को नष्ट करने से और परमात्म देव का प्रकाशन करने से 'जप' इन दो वर्णों (ज, प) का अतीव माहात्म्य कहा गया है। माला को हाथ में लेकर

मां माल्ये महामाल्ये सर्व शक्ति स्वरूपिणि !

चतुर्वर्गस्त्वयि न्यस्तस्तस्मात् मे सिद्धिदाभव।।

अविघ्नं कुरु माले त्वं गृह्वामि दक्षिणे करे।

जपकाले च सिद्ध्यर्थं प्रसीद ममसिद्धये।।

यह कहकर जप आरम्भ करें। जप के पश्चात् फिर प्राणायाम करे पूर्वोक्त विधि के अनुसार और पानी डालते हुए पढ़े-

अनेन महाराज्ञी भगवती मन्त्र जपेन श्री भूतेश्वर सहिता श्री महाराज्ञी देवी

प्रीयतां प्रीताऽस्तु।

फिर सिर पर माला रखकर पढ़े-

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।

सिद्धिर्भवतु मे देवि ! त्वत्प्रसादान्महेश्वरि।।

जप के विषय में ध्यान देने योग्य बातें-

१. भगवान श्री कृष्ण ने गीता में कहा है:-

"यज्ञानां जपयज्ञोऽस्मि" अर्थात् यज्ञों में मैं जपयज्ञ हूँ।

२. तन्त्रों में कहा है कि—

जपयज्ञात् परो यज्ञो नापरोऽस्तीह कश्चन।
तस्मात् जपेन धर्मार्थ काममोक्षांश्च साधयेत्।।

अर्थात् जपयज्ञ से दूसरा यज्ञ संसार में उत्तम नहीं है। अतः जप से ही धर्म अर्थ काम और मोक्ष को प्राप्त करें।

३. जप तीन प्रकार का होता है-

वाचिक, उपांशु और मानस।

इनमें से वाणी से मन्त्र का स्पष्ट उच्चारण वाचिक जप है। जिससे दूसरों को शब्द सुनाई न दे, इस प्रकार जरा जरा सा ओंठ हिलाकर सूक्ष्म उच्चारण पूर्वक मन्त्र का जप उपांशु जप कहलाता है। मन बुद्धि के द्वारा मन्त्र के वर्ण, शब्द और अर्थ का चिन्तन करना मानस जप है। इनमें से वाचिक जप से उपांशु जप और उपांशु जप से मानस जप श्रेष्ठ है।।

४. जप की सिद्धि के लिए, मन में संतोष, पवित्रता, मौनभाव और मन्त्र के अर्थ का विचार करना, उद्वेग एवं खेद का न होना आवश्यक है।

५. अपने दायें हाथ को सदा वस्त्र से ढ़ककर तथा पवित्र धारण किये जप करे वही जप सफल होता है। जो ऐसा नहीं करता उसका जप निष्फल होता है। कहा है व्यास स्मृति में—

वस्त्रेणाच्छाद्य तु करं सपवित्रं सदा जपेत्।
तस्य स्यात् सफलं जाप्यं तत् हीनं अफलं मतम्।।

६. मन्त्र ज़प की गिनती अवश्य रखनी चाहिए क्योंकि बिना संख्या का जप आसुर जप कहलाता है कहा है बृहत् पराशर संहिता में—

असंख्यमासुरं यस्मात् तत् गणयेत् ध्रुवम्।

और भी कहा है–

व्यग्रचित्तेन यत् जप्तं यत् जप्तंमेरुलंघने।

असंख्यातं तु यत् जप्तं तत् सर्वं निष्फलं भवेत्।।

७. प्रातर्नाभौ करं कृत्वा मध्याह्ने हृदि संस्थितम्।

सायं जपेत् च नासाग्रे एष जप्यविधिः स्मृतः।

अर्थात् सुबह के समय हाथ नाभि के पास, मध्याह्न में हृदय के पास तथा सायं नासिका के पास रखकर जप करना उत्तम है।

८क. जप के समय किसी से बोलना नहीं चाहिए, अपने शरीर के अंगों को हिलाना नहीं चाहिए। न सिर और न गर्दन हिलाये, न जंभाई करे, न नींद करे, न थूके, न शरीर के निचले अंगों का स्पर्श करे।एकान्त स्थान में स्थिर आसन से बैठकर केवल मन्त्र देवता और मन्त्र के अर्थ का चिन्तन करे। यदि इसके विपरीत जप होता है तो उसका फल राक्षस तथा सिद्ध हरण कर लेते हैं।

ब. जप करने के समय यदि मन इधर उधर भटकने लगे तो उसे वहां से जबर्दस्ती से हटा कर ध्येय पर लाना चाहिए। भटकने नहीं देना चाहिए।

९. घर में जप का फल एक गुणा, गाय की समीपता में सौ गुणा, पवित्र उद्यान और तीर्थ में हजार गुणा, नदी के तट पर लाख गुणा, देव मन्दिर और गुरु के आश्रम में करोड़ गुणा तथा शिवालय में अनन्त गुणा मिलता है।

१०. यस्मिन् स्थाने जपं कृत्वा शक्रो हरति तज्जपम्।

तन्मृदा लक्ष्मकुर्वीत ललाटे तिलकाकृतिः।।

व्यास स्मृति के अनुसार आसन के नीचे की मिट्टी का तिलक माथे पर करे या नीचे के स्थान को अन्त में हाथ लगाकर माथे पर रखे, ऐसा न करने से जप का फल इन्द्र को प्राप्त होता है।।

११. पंचमुखी रुद्राक्ष की माला, लाल चन्दन की माला या तुलसी की माला पर जप करना चाहिए। जप करते समय माला को मध्यमा या अनामिका के प्रथम पर्व पर रखना चाहिए। तर्जनी और कनिष्ठिका से माला को न छुवे।

माला १०८ दानों की होनी चाहिए। माला में रखे सुमेरु (मोटा दाना) को कभी स्पर्श न करें।

१२. माला में १०८ दानें ही क्यों है इस विषय में कहा है कि

रुद्राणां शतमेकंतु भैरवाष्टक योजितम्।
कृत्वा मेरुं महारुद्रं मालाचाष्टोत्तरं शतम्।।

अर्थात् प्रधान रुद्रों की संख्या एक सौ है, भैरवों की संख्या आठ है। इन आठ भैरवों को रुद्रों के साथ मिलाकर एक सौ आठ की संख्या होती है। सुमेरु को महारुद्र, माना जाता है। अथवा-

चतुर्विंशति तत्त्वाश्च नाड्या द्वासप्ततिस्तथा।
द्वादशाङ्गुलमुच्छ्वासो माला चाष्टोत्तरं शतम्।।

अर्थात् पांच ज्ञानेद्रिय पांच कर्मेन्द्रिय, पांच तन्मात्र, प्रकृति, पुरुष, मन, बुद्धि, अहंकार, ईश्वर, सदाशिव, शक्ति और शिव, ये २४ तत्त्व, प्रधान ७२ नाडियां और १२ अंगुल आयाम का उच्छ्वास, इस प्रकार इन्हीं १०८ संख्याओं की प्रतीक भूत १०८ दाने की माला मानी जाती है। अथवा

षड्नवत्याङ्गुलायामं स्वदेहं द्वादशाङ्गुलः।
बहिः प्राणो याति चैवं माला चाष्टोत्तरशतम्।।

अर्थात् अपने शरीर का आयाम ९६ अंगुल माना जाता है और प्राण वायु भी १२ अंगुल अन्दर से बाहर निकलती है इस प्रकार इन्हीं १०८ संख्याओं की प्रतीक माला मानी जाती है। अथवा

नवान्ता वर्णिता संख्या कालोऽयं द्वादशावधिः।
हत्वापरस्परं चैवं माला चाष्टोत्तरं शतम्।।

अर्थात् संख्या एक से नौ तक मानी जाती है काल की अवधि बारह है। बारह से नौ को गुणन करके = ९ x १२ = १०८ की संख्या माला की ही प्रतीक है। अथवा ज्योतिषशास्त्र के अनुसार अश्विनी आदि नक्षत्र २७ हैं। प्रत्येक नक्षत्र के चार पाद हैं अतः २७ x ४ = १०८ की संख्या माला की ही प्रतीक है।

श्री कुलार्णवतन्त्र में कहा है कि-

अक्षमाला द्विधा प्रोक्ता कल्पिताऽकल्पितेति च।

कल्पिता मणिभिः क्लृप्ता मातृकास्यादकल्पिता।।

अर्थात् अक्षमाला दो प्रकार की होती है।

कल्पित और अकल्पित। कल्पित माला मणियों (रुद्राक्ष आदि) की माला है। अकल्पिता - आदिक्षान्ता मातृका -अ से क्ष तक के वर्ण समुदाय को मातृका कहते हैं और यही अकल्पित है।

आदिक्षान्ताक्षवर्णत्वात् अक्षमालेति कीर्तिता।

अनुलोम विलोमाभ्यां गणयेत् मन्त्रवित्तमः।।

अर्थात् 'अ' वर्ण से 'क्ष' वर्ण तक के वर्ण समुदाय से उद्भूत अक्षमाला है। मन्त्र ज्ञाता जप संख्या की गणना इसी के आधार पर अनुलोम (forward order) और विलोम (reverse order) अक्रम से करे।

शिवसूत्र में भी कहा है "मातृका चक्र संबोधः" अर्थात् सद्गुरु के प्रसाद से ही शिष्य को अक्षमाला चक्र का ज्ञान होता है। अक्षमाला- अ से क्ष तक (अ आ इ ई से श, ष, स, ह, क्ष तक) के पचास वर्ण की सारे विश्वविस्तार की प्रतीक है। विश्व शिवतत्त्व (अनुत्तर तत्त्व) से आरंभ होकर पृथिवी तत्त्व में समाप्त होता है। एवं ३६ तत्त्व, इन पचास अक्षरों अर्थात् मातृका शक्ति का प्रतिनिधित्व करते हैं। इसकी महत्ता यहां तक कही गई है कि जो साधक इस वर्ण समुदाय का (अ से क्ष तक)

ही केवल सावधान मन से चिन्तन करता है वह असंख्य मन्त्रों का जप करता है क्योंकि सारे मन्त्र इसी वर्ण समुदाय से बने हैं।

स्मरण रहे-

न धारयेत् करे मूर्ध्नि कण्ठे च जप मालिकाम्
जपकाले जपं कृत्वा सदा शुद्धस्थले क्षिपेत्।।

अर्थात् जिस माला से जप करते हो उस माला को न हाथ में धरें, न गले में डाले। जप के समय जप करने के पश्चात् उसे शुद्ध स्थान पर संभाल के रखें।।

शैवक्रम के अनुसार शैवयोगी के लिए शाक्तोपाय साधना में नियत रूप में मन्त्रों का उच्चारण करना माला आदि को हाथ में धारण करना जप नहीं है अपितु ऐसा शैवयोगी प्राकृतिक पूर्णाहन्ता में प्रविष्ट होकर जो कुछ व्यवहार करता है, या प्राणों की चेष्टाओं का आचरण करता है वह सारा इस योगी के लिए जप ही बन जाता है। इसकी सारी चेष्टायें मन्त्ररूपता से ही स्फुरित होती है। चाहिये वह वार्तालाप करे, या कोई श्लोक पढ़े, या गाली गलौच का प्रयोग करे, उठे, बैठे, भ्रमण करे, स्नान करे वह सारा व्यवहार अहं परामर्श की एकता के साथ ही चलता है।

शिवसूत्र में ऐसे योगी के लिए ही कहा है

कथा जपः।।

---

पृच्छा करना"।।

हाथ में दो कुशाकाण्ड और अक्षत लेकर यह मन्त्र तीन बार पढ़िये-

**बीजत्रयाय विद्महे, तत्प्रधानाय धीमहि**
**तन्नः शक्तिः प्रचोदयात्।। ३ ।।**
**ॐ तत्सद्ब्रह्माद्यता-वत्तिथावद्यामुकमासस्याऽमुकपक्षस्य**

अमुकवासरान्वितायां आत्मनो वाङ्मनः कायोपार्जितपाप-निवारणार्थं भगवत्या अमायाः कामायाःचार्वङ्ग्याः टङ्कधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदा-भगवत्याः श्रीमहाराज्ञी-भगवत्याः श्रीज्वालाभगवत्याः व्रीडाभगवत्याः वैखरीभगवत्याः वितस्ताभगवत्याः गङ्गा-भगवत्याः यमुनाभगवत्याः कालिकाभगवत्याः सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुरसुन्दर्याः शैल-पुत्र्याः, ब्रह्मचारिण्याः, कूष्माण्ड्याः, चण्डघण्टायाः, स्कन्दमातुः, सिद्धिदायाः, महागौर्याः, कालरात्र्याः, कात्यायन्याः नवदुर्गाभगवत्याः सहस्रनाम्न्याः दुर्गादिव्याः भवान्याः श्रीमहाराज्ञीदेवीप्रीत्यर्थं देवीपूजनमच्छिद्रंसम्पूर्णमस्तु एवमस्तु।।

अब पानी में जौ दाने डालकर पढ़े

**एताभ्यो देवताभ्यो यवोदकं नमः उदकतर्पणं-नमः।।**

अब हाथ में फूल लेकर साष्टांग प्रणाम करते हुए पढ़ें-

"क्षमाफूलचढाना"

"स्तोत्रादि पढ़कर"

**अपराधो भवत्येव सेवकस्य पदे पदे।**
**का परा सहते देवि ! केवलं स्वामिनं बिना।।**
**यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम्।**
**निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया।।**
**आह्वानं नैव जानामि नैव जानामि पूजनम्।**
**पूजाभागं न जानामि क्षम्यतां परमेश्वरि।।**

**उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा उरसा वचसा मनसा नमस्कारं करोमि नमः।**

"तर्पण"। अब पानी (निर्माल्य में) डालते हुए पढ़िये-

नमो ब्रह्मणे नमो अस्त्वग्रये नमः पृथिव्यै
नम ओषधीभ्यः।
नमो वाचे नमो वाचस्पतये नमो विष्णवे
बृहते कृणोमि ।।

इत्येतासामेव देवतानां सलोकतां सायुज्यं सार्ष्टिं सामीप्यमाप्रोति य एवं विद्वान् स्वाध्यायमधीते।।

"माफीकी प्रार्थना"

स्वच्छस्वान्तेन ते भक्त्या महात्रिपुरसुन्दरि।
यथाभावं कृतां पूजां स्वीकृत्य विश स्वाश्रयम्।।
मनस्यन्तर्गतं मन्त्रं मन्त्रस्यान्तर्गतं मनः।
मनोमन्त्रमयं दिव्यमेकपुष्पं पराऽर्चनम्।।

सत्याः सन्तु यजमानस्य कामाः
इति दुर्गापूजा-सम्पूर्णा।।

# श्रीमहाराज्ञीकवचम्

श्री भैरव उवाच।

शृणु देवि प्रवक्ष्यामि राज्ञीकवचमुत्तमम्।
त्रैलोक्यविजयं नाम दिव्यं भोगापवर्गदम्।।
मूलमन्त्रमयं मुख्यमष्टसिद्धिप्रदायकम्।
सर्वैश्वर्यप्रदं लोके सर्वागमविनिश्चितम्।।
पठनाद् धारणाद् देवि महापातकनाशनम्।
महोत्पातप्रशमनं मूलविद्यामनोहरम्।।
विरूपाक्षः शिवो देवि विष्णुर्नारायणो बली।
ब्रह्मा पितामहो लोके जिष्णुर्गीर्वाणानायकः।।
महोनिधिस्तथा सूर्यस्तारकाधिपतिः शशी।
रत्नाकरश्च जलधिः शेषश्चानन्ततां गतः।।
श्रीराज्याः कवचस्यास्य पठनाद् धारणात् सदा।
बहुनोक्तेन देवेशि कवचस्यास्य धारणात्।।
मर्त्योऽप्यमरतां याति राज्ञीपदमवाप्नुयात्।
ऋषिरस्य महादेवि ब्रह्मा च्छन्दः समीरितम्।।
गायत्री देवता राज्ञी माया बीजमुदाहृतम्।
शरच्छक्तिः कीलकं च कामराजः सुरेश्वरि।।
भोगापवर्गसिद्ध्यर्थे विनियोग इति स्मृतः।

अस्य श्रीमहाराज्ञीत्रैलोक्यविजय कवचस्य, श्रीब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमहाराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः, क्लीं कीलकं, भोगापवर्गसिद्ध्यर्थे विनियोगः। ब्रह्म- ऋषये नमः शिरसि। गायत्रीछन्दसे नमो मुखे। महाराज्ञीदेवतायै नमो हृदि। ह्रीं बीजाय नमो नाभौ। सौः शक्तये नमो गुह्ये। क्लीं कीलकाय नमः पादयोः। विनियोगाय नमः सर्वाङ्गेषु। ॐ ह्रां

अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः, ह्रूं मध्यमाभ्या नमः, ह्रैं अनामिकाभ्यां नमः, ह्रौं कनिष्ठिकाभ्यां नमः, ह्रः करतलकरपृष्ठाभ्यां नमः।। "षडङ्गन्यास"। ह्रां हृदयायनमः, ह्रीं शिरसे स्वाहाः, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुँ, ह्रौं नेत्राभ्यां वौषट्, ह्रः अस्त्राय फट्।। ध्यायेत्।

उद्यद्दिवाकरसहस्त्ररुचिं त्रिनेत्रां
सिंहासनोपरिगतामुरगोपवीताम्।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारबिन्दाम्।।
चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम्।
पाशाङ्कुशाम्भोरुहखड्ग धारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम्।।
उों लक्ष्मीर्मे शिरः पातु ह्रीं ललाटं सरस्वती।
श्रीं बाला पातु मां नेत्रे त्र्यश्रं पातु श्रुती मम।।
रां दुर्गा पातु मे नासां क्लीं मुखं पातु शारिका।
सौः कण्ठं वैखरी पातु भं भुजौ पातु मे शिवा।।
गं हस्तौ पातु मे काली वं वक्षस्त्रिपुरावतु।
षडश्रं पातु मे मध्यं वृत्तं पार्श्वौ ममावतु।।
त्यैं पृष्ठं पातु मे ब्राह्मी रां नाभिं पातु वैष्णवी।
ज्यैं गुदं पातु रुद्राणी ह्रीं कटिं मेऽपराजिता।।
स्वां कौमारी पातु जानू हां जङ्घेऽवतु चण्डिका।
स्वाहा गुल्फौ च वाराही उों पादौ नारसिंहिका।।
विस्मारितं च यत् स्थानं यत् स्थानं नामवर्जितम्।
तत् सर्वं पातु मे राज्ञी मूलविद्यामयी परा।।
वासुकिः पूर्वतः पातु नीलनागोऽनलेऽवतात्।

तक्षको दक्षिणे पातु नैऋते पद्मनागकः।।
कार्कोटकः पश्चिमेऽव्याच्छङ्खपालस्तु वायुगे।
कुलिकश्चोत्तरे पातु शेष ईशानमण्डले।।
ब्राह्मी ब्राह्ममुहूर्तेऽव्याद् दिनादौ वैष्णवी मम।
रुद्राणी पातु मध्याह्ने सायं पात्वपराजिता।।
निशादौ पातु कौमारी निशीथे चण्डिकावतु।
निशान्ते पातु वाराही सर्वदा नारसिंहिका।।
असिताङ्गः क्षितेः पातु पयसो रुरुभैरवः।
चण्डो मां पवनात् पातु क्रोधेशः पातु मानलात्।।
उन्मत्तः सोमतः पातु भीषणः सूर्यतोऽवतु।
याजकाच्च कपालीशो व्योम्नः संहारकोऽवतात्।।
सदा समन्ततः पातु वपुर्वसुदलं मम।
गुरवः पान्तु सर्वत्र दिगीशाः पान्तु सर्वतः।।
वृत्तत्रयं पातु नित्यं धरागेहं सदावतु।
श्रीचक्रं पातु भीतिभ्यो योगिन्यः पान्तु सर्वदा।।
ऊर्ध्वं चाधः सदा पातु देवो रामेश्वरः शिवः।
सर्वत्र सर्वदा सत्यं वपुर्भूतेश्वरोऽवतात्।।
पादादिमूर्धपर्यन्तं वपुः सर्वत्र मेऽवतु।
शिरसः पादपर्यन्तं राज्ञी पञ्चदशाक्षरी।।
इतीदं कवचं राज्या मन्त्रगर्भं जयावहम्।
त्रैलोक्यविजयं नाम दारिद्र्यभयनाशनम्।।
सर्वरोगहरं साक्षात् सिद्धिदं पापनाशनम्
महाभयहरं देवि मूलविद्यामयं परम्।।
परमार्थप्रदं नित्यं भोगमोक्षैककारणम्।
यः पठेत् कवचं देवि रणे राजभये क्षणात्।।
संग्रामेषु रिपूञ्जित्वा विजयी गृहमेष्यति।

पठनात् कवचस्यास्य राजकोपः प्रशाम्यति।।
द्यूते धनं लभेद् द्यूती श्मशाने सिद्धिमाप्नुयात्।
त्रिवारं यः पठेद्रात्रौ रेतःस्रावे महेश्वरि।।
तस्य राज्ञी महाविद्या स्वप्नेऽभीष्टप्रदा भवेत्।
स्वयम्भूकुसुमैः शुद्धै रेतसा चोभयाङ्कितैः।।
रसैर्भूर्जे लिखेद्वर्म रवौ प्रातर्महेश्वरि।
चीनतन्तुभिरव्यक्तं लाक्षया वेष्टितं तथा।।
सुवर्णगुटिकान्तःस्थं पूजयेद्यन्त्रराजवत्।
गुटिकैषा महाविद्या राज्ञी मूर्तिरिवापरा।।
मूलविद्यामयी देवि सर्वाभीष्टफलप्रदा।
शिरःस्था धनदा देवि कण्ठस्था वाक्प्रदायिनी।।
वक्षःस्था पुत्रदा देवि कटिस्था भोगदायिनी।
पृष्ठस्था बलदा नित्यं कुक्षिस्था रोगनाशिनी।।
सर्वार्थसाधिनी लोके यथाभीष्टफलप्रदा।
गुटिकेयं शुभा राज्या न देया यस्य कस्यचित्।।
इदं कवचमीशानि मूलविद्यामयं ध्रुवम्।
सारस्वतप्रदं लक्ष्मीपुत्रपौत्रविवर्धनम्।।
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम्।
चतुष्षष्ट्यादितन्त्राणां सारमादाय वर्णितम्।।
श्मशाने यः पठेत् सायं महाचीनक्रमेश्वरः।
स साधको महादेवि राज्ञीपुत्रो भविष्यति।।
इतीदं मम सर्वस्वं त्रैलोक्यविजयाभिधम्।
कवचं मन्त्रगर्भं तु गोपनीयं स्वयोनिवत्।।

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीमहाराज्यास्त्रैलोक्यविजयं नाम कवचम्।।

# महाराज्ञीसहस्त्रनामकम्

श्रीभैरव उवाच।

भगवन् वेदतत्वज्ञ मन्त्रतन्त्रविचक्षण।
शरण्य सर्वलोकेश शरणागतवत्सल।।
कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक्।
मान्त्रिको भैरवेशान तन्मे गदितुमर्हसि।।

श्रीभैरव उवाच।

या देवी निष्कला राज्ञी भगवत्यमलेश्वरी।
सा सृजत्यवति व्यक्तं संहरिष्यति तामसी।।
तस्या नामसहस्त्रं ते वक्ष्ये स्नेहेन पार्वति।
अवाच्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम्।।
परमार्थप्रदं नित्यं परमैश्वर्यकारणम्।
सर्वागमरहस्याढ्यं सकलार्थप्रदीपनम्।।
समस्तशोकशमनं महापातकनाशनम्।
सर्वमन्त्रमयं दिव्यं राज्ञीनामसहस्त्रकम्।।

अस्य श्रीमहाराज्ञीनामसहस्त्रस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, श्रीभूतेश्वरीमहाराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः, क्लीं कीलकं, महाराज्ञीसहस्त्रनामपाठे विनियोगः। ब्रह्मऋषये नमः शिरसि। गायत्रीच्छन्दसे नमो मुखे। श्रीभूतेश्वरी-महाराज्ञीदेवतायै नमो हृदि। ह्रीं बीजाय नमो नाभौ। सौः शक्तये नमो गुह्ये। क्लींकीलकाय नमः पादयोः। विनियोगाय नमः सर्वाङ्गेषु। ध्यानं कुर्यात्।

या द्वादशार्कपरिमण्डितमूर्तिरिका
सिंहासनस्थितिमतीमुरगैर्वृतां च।
देवीमनक्षगतिमीश्वरतां प्रपन्नां

तां नौमि भर्गवपुषीं परमार्थराज्ञीम्।।
चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम्।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम्।।
ॐह्रींश्रींरांमहाराज्ञी क्लींसौःपञ्चदशाक्षरी।
ह्रींस्वाहात्र्यक्षरीविद्या पराभगवती विभा।।
भास्वती भद्रिका भीमा भर्गरूपा महस्विनी।
माननीया मनीषा च मनोजा च मनोजवा।।
मानदा मन्त्रविद्या च महाविद्या षडक्षरी।
षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी शिवा।।
शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी।
महालक्ष्मीर्महोरस्का महौजस्का महोदया।।
मातङ्गी मोदकाहारा मदिरारुणलोचना।
साध्वी शीलवती शाला सुधाकलशधारिणी।
खड्गिनी पद्मिनी पद्मा पद्मकिञ्जल्करञ्जिता।
हृत्पद्मवासिनी हृद्या पानपात्रधरा धरा।
धराधरेन्द्रतनया दक्षिणा दक्षजा दया।
दयावती महामेधा मोदिनी बोधिनी गदा।।
गदाधरार्चिता गोधा गङ्गा गोधावरी गया।
महाप्रभावसहिता महोरगविभूषणा।
महामुनिकृतातिथ्या माध्वी मानवती मघा।
बाला सरस्वती लक्ष्मीर्दुर्गा दुर्गतिनाशिनी।।
शारी शरीरमध्यस्था वैखरी खेचरेश्वरी।
शिवदा शिववक्षःस्था कालिका त्रिपुरापुरी।।
पुरारिकुक्षिमध्यस्था मुरारिहृदयेश्वरी।

बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी।।
मुण्डमालाञ्चिता मुद्रा क्षोभणा कर्षणक्षमा।
ब्राह्मी नारायणीदेवी कौमारी चापराजिता।।
रुद्राणी च शचीन्द्राणी वाराही वीरसुन्दरी।
नारसिंही भैरवेशी भैरवाकारभीषणा।।
नागालङ्कारशोभाढ्या नागयज्ञोपवीतिनी।
नागकङ्कणकेयूरा (१००) नागहारा सुरेश्वरी।।
सुरारिघातिनी पूता पूतना डाकिनीक्रिया।
क्रियावती कुरी कृत्या डाकिनी लाकिनी लया।।
लीलावती रसाकीर्णा नागकन्यामनोहरा।
हारकङ्कणशोभाढ्या सदानन्दा शुभङ्करी।।
प्रहासिनी मधुमती सरसी स्मरमोहिनी।
महोग्रवपुषी वार्ता वामाचारप्रिया सिरा।।
सुधामयी वेणुकरा वैरिघ्नीवीरसुन्दरी।
वारिमध्यस्थिता वामा वामनेत्रा शशिप्रभा।।
शर्मदा शङ्करी सीता रवीन्दुशिखिलोचना।
मदिरा वारुणी वीणागीतिज्ञा मदिरावती।।
वटस्था वारुणीशक्तिर्वटजा वटवासिनी।
वटुकी वीरसूर्वन्द्या स्तम्भिनी मोहिनी च मुत्।।
मुद्गराङ्कुशहस्ता च वराभयकरा कुटी।
पाटीरद्रुमवल्ली च वटिका वटुकेश्वरी।।
इष्टदा कृषिभूः कीरी रेवतीरमणप्रिया।
रोहिणी रेवती रम्या रमणा रोमहर्षिणी।।
रसोल्लासा रसासारा सारिणी तारिणी तडित्।
तरीतरित्रहस्ता च तोतुला तरणिप्रभा।।

रत्नाकरप्रिया रम्भा रत्नालङ्कारशोभिता।
रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा।।
षड्रसा द्विरसा माला मालाभरणभूषिता।
मालती मल्लिकामोदा मोदकाहारवल्लभा।।
वल्लभी मथुरा माया काशी काञ्ची ललन्तिका।
हसन्तिका हसन्ती च भ्रमन्ती च वसन्तिका।।
क्षेमा क्षेमङ्करी क्षामा क्षौमवस्त्रा (२००) क्षणेश्वरी।
क्षणदा क्षेमदा सीरा सीरपाणिसमर्चिता।।
क्रीता क्रीतातपा क्रूरा कमनीया कुलेश्वरी।
कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी।।
कारुण्या चैव काश्मीरी दूती द्वारवती ध्रुवा।
ध्रुवस्तुता ध्रुवगतिः पीठेशी बगलामुखी।।
सुमुखी शोभनानीतिः रत्नज्वालामुखी नतिः।
अलकोज्ञयिनी भोग्या भङ्गी भोगावती बला।।
धर्मराजपुरी पूता पूर्णासत्त्वाऽमरावती।
अयोध्या योधनीया च युगमाता च यक्षिणी।।
यज्ञेश्वरी योगगम्या योगिध्येया यशस्विनी।
यशोवती च चार्वङ्गी चारुहासा चलाचला।।
हरीश्वरी हरेर्माया मायिनी वायुवेगिनी।
अम्बालिकाऽम्बा भर्गेशी भृगुकूटा महामतिः।।
कोशेश्वरी च कमला कीर्तिदा कीर्तिवर्धिनी।
कठोरवाक्कुहूमूर्तिः चन्द्रबिम्बसमानना।।
चन्द्रकुङ्कुमलिप्ताङ्गी कनकाचलवासिनी।
मलयाचलसानुस्था हिमाद्रितनयातनुः।।
हिमाद्रिकुक्षिदेशस्था कुब्जिका कोसलेश्वरी।
कारैकनिगडा गूढा गूढगुल्फातिगोपिता।।

तनुजा तनुरूपा च बाणचापधरा नुतिः।
धुरीणा धूम्रवाराही धूम्रकेशाऽरुणानना।।
अरुणेशी रतिः स्वातिर्गरिष्ठा च गरीयसी।
महानसी महाकारा सुरासुरभयङ्करी।।
अणुरूपा महज्ज्योतिरनिरुद्धसरस्वती।
श्यामा श्याममुखी शान्ता श्रान्तसन्तापहारिणी।।
गौर्गण्या गोमयी गुह्या गोमती गुरुवागऽया।
गीतसन्तोषसंसक्ता (३००) ग्राहिणी ग्रहिणी ग्रहा।।
गणप्रिया गजगतिर्गान्धिारी गन्धमोदिनी।
गन्धमादनसानुस्था सह्याचलकृतालया।।
गजाननप्रिया गव्या ग्राहिका ग्राहवाहना।
गुहप्रसूर्गुहावासा ग्रहमालाविभूषणा।।
कौबेरी कुहका भ्रान्तिस्तर्कविद्या प्रियङ्करी।
पीताम्बरा पटाकारा पताका सृष्टिजा सुधा।।
दाक्षायणी दक्षसुता दक्षयज्ञविनाशिनी।
ताराचक्रस्थिता तारा तुरी तुर्या तुटिस्तुला।।
सन्ध्यात्रयी सन्धिजरा सन्ध्यातारुण्यलालिता।
ललिता लोहिता लम्पा चम्पा कम्पाकुला सृणिः।।
सृतिः सत्यवती स्वस्था समाना मानवर्धिनी।
महोमयी मनस्तुष्टिः कामधेनुः सनातनी।।
सूक्ष्मरूपा सूक्ष्ममुखा स्थूलरूपा कलावती।
तलातलाश्रया सिन्धुस्त्र्यम्बिका लम्पिका जया।।
सौदामिनी सुधादेवी सनकर्षिसमर्चिता।
मन्दाकिनी च यमुना विपाशा नर्मदानदी।।
गण्डक्यैरावती सिप्रा वितस्ता च सरस्वती।
रेवा चैरावती चेक्षुमती सागरवासिनी।।

देवकी देवमाता च देवेशी देवसुन्दरी।
दैत्यघ्नी दमनी दात्री दितिर्दितिजसुन्दरी।।
विद्याधरी च विद्येशी विद्याधरजसुन्दरी।
मेनका चित्रलेखा च चित्रिणी च तिलोत्तमा।।
उर्वशी मोहिनी रम्भा चाप्सरोगणसुन्दरी।
यक्षिणी यक्षलोकेशी नरवाहनपूजिता।।
यक्षेन्द्रतनया योग्या यक्षनायकसुन्दरी।
गन्धवती चिता गन्धा सुगन्धा गीततत्परा।।
गन्धर्वतनया नम्रा (४००) गीतिर्गन्धर्वसुन्दरी।
मन्दोदरी करालाक्षी मेघनादवरप्रदा।।
मेघवाहनसन्तुष्टा मेघमूर्तिश्च राक्षसी।
रक्षोहन्त्री केकसी च रक्षोनायकसुन्दरी।।
किंन्नरी कम्बुकण्ठी च कलकण्ठस्वना सुधा।
किंमुखी हयवक्त्रा च केला किन्नरसुन्दरी।।
पिशाची राजमातङ्गी उच्छिष्टपदसंस्थिता।
महापिशाचिनी चान्द्री पिशाचकुलसुन्दरी।।
गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी।
सिद्धिप्रदा सिद्धवधूः सिद्धेशी सिद्धसुन्दरी।।
भूतेश्वरी भूतालया भूतधात्री भयापहा।
भूतभीतिहरी भव्या भूतजा भूतसुन्दरी।।
पृथ्वी पार्थिवलोकेशी पृथा विष्णुसमर्चिता।
वसुन्धरा वसुनता पृथिवी भूमिसुन्दरी।।
अम्भोधितनयाऽलुप्ता जलजाक्षी जलेश्वरी।
अमूर्तिरम्मयी मारी जलस्था जलसुन्दरी।।
तेजस्विनी महोधात्री तैजसी सूर्यबिम्बगा।
सूर्यकान्तिः सूर्यतेजास्तेजोरूपैकसुन्दरी।।

वायुवाहा वायुमुखी वायुलोकैकसुन्दरी।
गगनस्था खेचरेशी शून्यरूपा निराकृतिः।।
निराभासा भासमाना द्युतिराकाशसुन्दरी।
क्षितिमूर्तिधराऽनन्ता क्षितिभृल्लोकसुन्दरी।।
अब्धियाना रत्नशोभा वरुणेशी वरायुधा।
पाशहस्ता पोषणा च वरुणेश्वरसुन्दरी।।
अनलैकरुचिज्योतिः पंचानिलगतिस्थितिः।
प्राणापानसमानेच्छा चोदानव्यानरूपिणी।।
पंचवातगतिर्नाडीरूपिणी वातसुन्दरी।
अग्निरूपा वह्निशिखा वडवानलसन्निभा।।
हेतिर्हविर्हुतज्योतिरग्निजा वह्निसुन्दरी।
सोमेश्वरी सोमकला सोमपानपरायणा।।
सौम्यानना सौम्यरूपा सोमस्था सोमसुन्दरी।
सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी।।
याज्ञिकी यज्ञभागेच्छा यजमानवरप्रदा।
याजकी यज्ञविद्या च यजमानैकसुन्दरी (५००)।।
आकाशगामिनी वन्द्या शब्दजाकाशसुन्दरी।
मीनप्रिया मीननेत्रा मीनाशा मीनसुन्दरी।।
कूर्मपृष्ठगता कूर्मी कूर्मजा कूर्मरूपिणी।
वाराही वीरसूर्वह्याँ वरारोहा मृगेक्षणा।।
वराहमूर्तिर्वाचाला दंष्ट्रा वराहसुन्दरी।
नरसिंहाकृतिर्देवी दुष्टदैत्यनिसूदिनी।।
प्रद्युम्नवरदा नारी नरसिंहैकसुन्दरी।
वामजा वामनाकारा नारायणपरायणा।।
बलिदानवदर्पघ्नी वाम्या वामनसुन्दरी।
रामप्रिया रामकीलिः क्षत्रवंशक्षयङ्करी।।

